हंसा हंसविशेषाः स्थिता येषु तेषां तथोक्तानाम् । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । मरकतमणेर्भा इव भाः कान्तिर्यस्य तेन तथोक्तेन वारिणा जलेन भूषितानां शोभितानां तोयाशयानां जलाशयानामतिशयरूपामत्यन्तसुन्दरां श्रियं शोभां वहति । धत्त इत्यर्थः । मालिनीवृत्तम् । तल्लक्षणं तु पूर्वोक्तम् ॥

शरदि कुमुदसङ्गाद्वायवो वान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥२२॥

शरदीति ॥ शरदि शरत्काले कुमुदस्य कैरवस्य सङ्गात्संसर्गाच्छीताः शीतला वायवः पवना वान्ति वहन्ति । दिग्विभागा आशाप्रान्ताः । 'दिशस्तु ककुभः काष्ठा आशाश्च' इत्यमरः । विगतानि जलदानां मेघानां वृन्दानि समूहा येभ्यस्ते तथोक्ता अत एव मनोज्ञाः सुन्दराः । अम्भो जलं विगतं विनष्टं कलुषं कालुष्यं यस्य

---

१. 'कुसुम.' २. 'तोयात्.' ३. 'यान्ति.' ४. 'विशद.' ५. 'शालिपक्का.'

२२–२३ श्लोकयोर्मध्येऽयमंशो दृश्यते—

करकमलमनोज्ञाः कान्तसंसक्तहस्ता
वदनविजितचन्द्राः काश्चिदन्यास्तरुण्यः ।
रचितकुसुमगन्धि प्रायशो यान्ति वेश्म
प्रबलमदनहेतौ सूक्तसङ्गोक्तरम्याः ॥
सुरतरुचिविलासाः सत्सखीभिः समेता
असमशरविनोदं सूचयन्ति प्रकामम् ।
अनुगतमुखराभिः श्रोणिमध्ये विनोदं
शरदि तरुणकान्ताः सूचयन्ति प्रमोदान् ॥

त्तथोक्तम् । निर्मलमित्यर्थः । धरित्री क्षितिः । 'धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः । श्यानपङ्का शुष्कपङ्का व्योमाकाशं विमला निर्मलाः किरणा मयूखा यस्य तादृशश्चन्द्रो यत्र तत्तथोक्तम् । 'किरणोस्रमयूखांशु-' इत्यमरः । ताराभिर्नक्षत्रैर्विचित्रं सुन्दरमित्यर्थः । 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इत्यमरः ॥

दिवसकरमयूखैर्बोध्यमानं प्रभाते
वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य ।
कुमुदमपि गतेऽस्तं लीयते[1] चन्द्रबिम्बे[2]
हसितमिव वधूनां प्रोषितेषु प्रियेषु ॥ २३ ॥

दिवसेति ॥ प्रभाते प्रातःकाले दिवसकरस्य सूर्यस्य मयूखैः किरणैर्बोध्यमानं । विकाश्यमानमित्यर्थः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । पङ्कजं कमलमद्येदानीं जृम्भते शोभते । कुमुदं कैरवमपि चन्द्रबिम्बेऽस्तमस्ताचलं गते प्राप्ते सति प्रोषितेषु विदेशगतेषु प्रियेषु कान्तेषु वधूनां रमणीनां हसितमिव लीयते । क्षीणं भवतीत्यर्थः ॥

असितनयनलक्ष्मीं[3] लक्षयित्वोत्पलेषु
क्वणितकनककाञ्चीं मत्तहंसस्वनेषु[4] ।
अधररुचिरशोभां बन्धुजीवे प्रियाणां[5]
पथिकजन इदानीं रोदिति भ्रान्तचित्तः[6] ॥२४॥

असितेति ॥ पथिकजनः पान्थजन इदानीं शरत्काले

---

१. 'म्लायते'. २. 'चन्द्रबिम्बम्'. ३. 'कान्तिम्'. ४. 'हंसी'. ५. 'प्रियायाः'. ६. 'भ्रान्तचेताः'.

प्रियाणां प्रेयसीनामसितानां कृष्णानां नयनानां नेत्राणां लक्ष्मीं शोभाम् । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । 'लोचनं नयनं नेत्रम्' इत्यमरः । उत्पलेषु कमलेषु क्वणिता क्वणन्ती या कनककाञ्ची सुवर्णरशना तां मत्तहंसस्वनेषून्मत्तमरालशब्देष्वधरस्योष्ठस्य रुचिरा सुन्दरा या शोभा तां बन्धुजीवे बन्धूककुसुमे लक्षयित्वा दृष्ट्वा भ्रान्तचित्तः सन्रोदिति । रोदनं करोतीत्यर्थः ॥

स्त्रीणां विहाय[1] वदनेषु शशाङ्कलक्ष्मीं[2]
कामं[3] च हंसवचनं मणिनूपुरेषु ।
बन्धूककान्ति[4]मधरेषु मनोहरेषु
क्वापि प्रयाति सुभगा शरदागमश्रीः ॥ २५ ॥

स्त्रीणामिति ॥ सुभगा सुन्दरा या शरदागमस्य श्रीः शोभा शशाङ्कस्य चन्द्रस्य लक्ष्मीं शोभां स्त्रीणां सुन्दरीणां वदनेषु मुखेषु । कामं रमणीयं हंसवचनं मरालविरुतं च मणिनूपुरेषु मणिखचितमञ्जीरेषु बन्धूकस्य बन्धूककुसुमस्य कान्तिं च मनोहरेषु सुन्दरेष्वधरेषु विहाय त्यक्त्वा क्वापि कुत्रचिदपि प्रयाति गच्छतीत्यर्थः । एतेन हेमन्तागमः सूचितः । वसन्ततिलका वृत्तम् ॥

विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी
विकसितनवकाश[5]श्वेतवासो वसाना ।
कुमुदरुचिरकान्तिः[6] कामिनीवोन्मदेयं
प्रतिदिशतु[7] शरद्वश्चेतसः प्रीतिमग्र्याम् ॥ २६ ॥

---

१. 'निनाय'. २. 'लक्ष्मीः'. ३. 'हास्ये विशुद्धवदने कुमुदाकरश्रीम्'; 'हास्ये विशुद्धवदने कुमुदाकरश्रीः'. ४. 'कान्तिः'. ५. 'विकसितनवकाशासंकुलालम्बिवस्त्रा'; 'कुसुमितवनकाशाव्याकुलालम्बिवासा'. ६. 'हासा'. ७. 'परिदिशतु'; 'उपदिशतु'.

विकचेति ॥ विकचं विकसितं कमलमेव वक्त्रं मुखं यस्याः सा तथोक्ता । पक्षे विकचं कमलमिव वक्त्रं यस्याः सेति । फुल्लानि प्रफुल्लानि नीलोत्पलानीन्दीवराण्येवाक्षिणी यस्याः सा तथोक्ता । पक्षे फुल्लानि नीलोत्पलानीवाक्षिणी यस्याः सेति । विकसितं विकासं प्राप्तं नवकाशं नूतनं काशकुसुममेव श्वेतवासः श्वेतवस्त्रम् । पक्षे विकसितनवकाशमिव श्वेतवासो वसाना । कुमुदेन कैरवेण सदृशी रुचिरा कान्तिर्यस्याः सा तथोक्ता । पक्षे कुमुदमिव रुचिरा कान्तिर्यस्याः सेयं शरदुन्मदोत्कटमदा कामिनीव प्रेयसीव वो युष्माकं चेतसश्चित्तस्याग्र्यामुत्तमां प्रीतिं प्रतिदिशतु ददात्वित्यर्थः ॥ मालिनीवृत्तमेतत् ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये शरद्वर्णनं नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

अथ क्रमप्राप्तं हेमन्तकालं वर्णयति—

**नवप्रवालोद्गमसस्यरम्यः**
**प्रफुल्ललोध्रः परिपक्वशालिः ।**
**विलीनपद्मः प्रपतत्तुषारो**
**हेमन्तकालः समुपागतोऽयम् ॥ १ ॥**

नवेति ॥ नवानां नूतनानां प्रवालानां पल्लवानामुद्गम

---

१. 'पुष्प'. २. 'प्रिये'.

उत्पत्तिः सस्यानि च तै रम्यो रमणीयः। प्रफुल्लाः संफुल्ला लोध्रा लोध्रवृक्षा यस्मिन्स तथोक्तः। परिपक्काः परिणताः शालयो धान्यानि यस्मिन्स तथोक्तः। विलीनानि म्लानानि पद्मानि कमलानि यस्मिन्स तथोक्तः। प्रपतत्तुषारो हिमं यस्मिन्स तथोक्तः। 'तुषारस्तुहिनं हिमम्' इत्यमरः। अयं हेमन्त-कालः समुपागत आगतः। प्राप्त इत्यर्थः। उपेन्द्रवज्रावृत्तम्। तल्लक्षणं तु—'उपेन्द्रवज्रा जतजास्ततो गौ' इति॥

मनोहरैः[1] कुङ्कुमरागरक्तै-
स्तुषारकुन्देन्दुनिभैश्च हारैः।
विलासिनीनां स्तनशालिनीना-
मलंक्रियन्ते[2] स्तनमण्डलानि ॥ २ ॥

मनोहरैरिति॥ स्तनैः कुचैः शालन्ते शोभन्त इति स्तन-शालिन्यस्तासां तथोक्तानां विलासिनीनां विलासवतीनां स्तनमण्डलानि कुचमण्डलानि मनोहरैः कुङ्कुमस्य काश्मीर-जन्मनो रागेण रक्ताः पिञ्जरास्तैस्तथोक्तैः। 'अथ कुङ्कुमम् काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने' इत्यमरः। तुषारो हिमम्, कुन्दः कुन्दकुसुमम्, इन्दुश्चन्द्रस्तैर्निभाः सदृशा-स्तैस्तथोक्तैस्तैर्हारैर्मुक्ताहारैरलंक्रियन्त इत्यर्थः॥

न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाङ्गदानि।
नितम्बबिम्बेषु नवं दुकूलं
तन्वंशुकं पीनपयोधरेषु ॥ ३ ॥

---

१. 'चन्दनरागगौरैः', 'कुङ्कुमरागपिञ्जरैः'. २ 'नालंक्रियन्ते'.

नेति ॥ विलासिनीनां बाहुयुग्मेषु करयुगेषु वलयानि कटकान्यङ्गदानि केयूराणि तानि । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । 'केयूरमङ्गदं तुल्ये' इत्यपि । सङ्गं संबन्धं न प्रयान्ति न प्राप्नुवन्ति । नवं नूतनं दुकूलं वस्त्रं नितम्बबिम्बेषु कटिपश्चाद्भागेषु सङ्गं न प्रयाति । तनु सूक्ष्ममंशुकं वस्त्रं कञ्चुक्यादि पीनाः परिपुष्टा ये पयोधराः कुचास्तेषु सङ्गं न प्रयातीति वचनविपरिणामेनान्वयः ॥

**काञ्चीगुणैः काञ्चनरत्न[1]चित्रै-**
**र्नो भूषयन्ति प्रमदा नितम्ब[2]म् ।**
**न नूपुरैर्हंसरुतं भजद्भिः**
**पादाम्बुजान्यम्बुजकान्ति[3]भाञ्जि ॥ ४ ॥**

काञ्चीति ॥ प्रमदाः स्त्रियो नितम्बं काञ्चनं स्वर्णं रत्नानि च तैश्चित्रैश्चमत्कृतैः काञ्चीगुणै रसनाकलापैर्नो भूषयन्ति नालंकुर्वन्ति । तथाम्बुजस्य कमलस्य कान्तिं भजन्ति तानि तथोक्तानि पादाम्बुजानि चरणकमलानि हंसरुतं मरालविरुतं भजद्भिर्नूपुरैर्मञ्जीरैर्न भूषयन्ति । उपजातिवृत्तमेतत् । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति ॥

**गात्राणि कालीयकचर्चितानि**
**सपत्रलेखानि [4]मुखाम्बुजानि ।**

१. 'रक्त' २. 'नितम्बान्'. ३. 'भान्ति'. ४. 'नखाम्बुजानि'.

शिरांसि कालागुरुधूपितानि
कुर्वन्ति[1] नार्यः सुरतोत्सवाय ॥ ५ ॥

गात्राणीति ॥ नार्यः स्त्रियः सुरतोत्सवाय गात्राणि शरीराणि कालीयकेन जायकेन चर्चितानि लिप्तानि । 'अथ जायकम् । कालीयकं च कालानुसार्यम्' इत्यमरः । मुखाम्बुजानि वदनकमलानि पत्रलेखा पत्राङ्गुलिः कपाले कस्तूरिकापत्रावली तया सहितानि युक्तानि । 'पत्रलेखा पत्राङ्गुलिरिमे समे' इत्यमरः । शिरांसि कालागुरुणा धूपितानि संजातधूपानि सुगन्धान्वितानि कुर्वन्तीत्यर्थः ॥

रतिश्रमक्षामविपाण्डुवक्त्राः
संप्राप्तहर्षाभ्युदयास्तरुण्यः[2] ।
हसन्ति नोच्चैर्दशनाग्रभिन्ना-
न्प्रपीड्यमानानधरानवेक्ष्य[3] ॥ ६ ॥

रतीति ॥ रतिश्रमेण सुरतश्रमेण क्षामं कृशं विपाण्डु विपाण्डुवर्णं वक्त्रं यासां तास्तथोक्ताः । संप्राप्तो हर्षस्यानन्दस्याभ्युदयो याभिस्तास्तथोक्तास्तरुण्यः कामिन्यो दशनानां रदनानामग्रैरग्रभागैर्भिन्नाः क्षतास्तथोक्तानत एव प्रपीड्यमानानधरानोष्ठानवेक्ष्य दृष्ट्वोच्चैरुच्चैःस्वरेण न हसन्ति हास्यं न कुर्वन्तीत्यर्थः । उच्चैर्हसन्ति तेऽधिकं पीड्यन्त इति भावः ॥

---

१. 'भवन्ति'. २. 'प्राप्तेऽपि हर्षाभ्युदये'. ३. 'प्रभिन्नरागान्'.

पीनस्तनोरःस्थलभागशोभा-
मासाद्य तत्पीडनजातखेदः ।
तृणाग्रलग्नैस्तुहिनैः पतद्भि-
राक्रन्दतीवोषसि शीतकालः ॥ ७ ॥

पीनेति ॥ पीनौ पुष्टौ स्तनौ यत्र तादृशो य उरस्थल-भागस्तस्य शोभामासाद्य प्राप्य तत्पीडनेन जातः संजातः खेदो दुःखं यस्य स तथोक्तः शीतकालः पतद्भिः प्रपतद्भि-रत एव तृणाग्रे तृणप्रान्ते लग्नानि संलग्नानि तैस्तथोक्तैस्तु-हिनैस्तुषारैरुषसि प्रभात आक्रन्दतीवेत्युत्प्रेक्षा ॥

प्रभूतशालिप्रसवैश्चितानि
मृगाङ्गनायूथविभूषितानि ।
मनोहरक्रौञ्चनिनादितानि
सीमान्तराण्युत्सुकयन्ति चेतः ॥ ८ ॥

प्रभूतेति ॥ प्रभूताः संभूता ये शालिप्रसवा धान्यानि तैश्चितानि व्याप्तानि । मृगाङ्गनानां हरिणरमणीनां यूथैः समुदायैर्विभूषितानि शोभितानि । मनोहराः सुन्दरा ये क्रौञ्चाः पक्षिविशेषास्तैर्निनादितानि प्रतिनादितानि सीमान्तराणि सीम्नां प्रान्तभागाश्चेतः । अन्यस्येति शेषः । उत्सुकयन्त्यु-त्कण्ठयन्तीत्यर्थः ॥

प्रफुल्लनीलोत्पलशोभितानि
सोन्मादकादम्बविभूषितानि ।

---

१. 'उरुस्थल'. २. 'लम्बैः'. ३. 'प्रसूति.' ४. शरादिकादम्बविघट्टितानि.'

प्रसन्नतोयानि सुशीतलानि[1]
सरांसि चेतांसि हरन्ति पुंसाम्[2] ॥ ९ ॥

प्रफुल्लेति ॥ प्रफुल्लैरुत्फुल्लैर्नीलोत्पलैरिन्दीवरैः शोभितानि भूषितानि । सोन्मादैरुन्मादसहितैः कादम्बैः कलहंसैर्विभूषितानि । प्रसन्नं निर्मलं तोयं जलं येषु तानि तथोक्तानि । सुशीतलानि सरांसि सरोवराणि पुंसां पुरुषाणां चेतांस्यन्तःकरणानि हरन्तीत्यर्थः ॥

पाकं व्रजन्ती हिमजातशीतै-[3]
राधूयमाना सततं मरुद्भिः ।
प्रिये प्रियङ्गुः प्रियविप्रयुक्ता
विपाण्डुतां याति विलासिनीव ॥ १० ॥

पाकमिति ॥ हे प्रिये, हिमेन तुषारेण जातैः संजातैः शीतैः पाकं परिपाकं व्रजन्ती गच्छन्ती मरुद्भिर्वायुभिः सततं निरन्तरमाधूयमाना कम्पायमाना प्रियङ्गुर्गोवन्दिनी लता । 'श्यामा तु महिलाह्वया । लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली' इत्यमरः । प्रियेण कान्तेन विप्रयुक्ता विलासिनीव स्त्रीव । विपाण्डुतां विशेषेण पाण्डुतां याति । गच्छतीत्यर्थः ॥

पुष्पासवामोदिसुगन्धिवक्त्रो[4]
निःश्वासवातैः सुरभीकृताङ्गः ।

---

१. 'सशैवलानि'. २. 'यूनाम्'. ३. 'सङ्गशीतैः'. ४. 'आमोद'.
९-१० श्लोकयोर्मध्येऽयमंशो दृश्यते—
मार्गं समीक्ष्यातिनिरस्तनीरं प्रवासखिन्नं पतिमुद्वहन्त्यः ।
प्रवेक्ष्यमाणा हरिणेक्षणाक्ष्यः प्रबोधयन्तीव मनोरथानि ॥

परस्पराङ्गव्यतिरिक्तशायी
शेते जनः कामरसानुविद्धः ॥ ११ ॥

पुष्पेति ॥ पुष्पासवस्य पुष्पनिर्गतासवस्य पुष्पयुक्तासवस्य आमोदेन सौगन्ध्येन सुगन्धि सुरभि वक्त्रं वदनं यस्य स तथोक्तः । निःश्वासवातैः श्वासोच्छ्वासपवनैः सुरभीकृतमङ्गं शरीरं यस्य स तथोक्तः । कामरसेन कंदर्परसेनानुविद्धो व्याप्तोऽत एव परस्परस्यान्योन्यस्याङ्गेन व्यतिरिक्तं संलग्नमिति तथा शेते स तथोक्तो जनो लोकः शेते । निद्रातीत्यर्थः ॥

दन्तच्छदैः सव्रणदन्तचिह्नैः
स्तनैश्च पाण्यग्रकृताभिलेखैः ।
संसूच्यते निर्दयमङ्गनानां
रतोपयोगो नवयौवनानाम् ॥ १२ ॥

दन्तच्छदैरिति ॥ नवं नूतनं यौवनं तारुण्यं यासां तासां तथोक्तानामङ्गनानां वनितानां सव्रणानि सक्षतानि दन्तानां रदनानां चिह्नानि लक्ष्माणि येषु तैस्तथोक्तैः । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । दन्तच्छदैरधरैः पाण्यग्रैर्नखैः कृतोऽभिलेखो लेखनं येषु तैस्तथोक्तैः । स्तनैः कुचैश्च निर्दयं दयारहितं यथा भवति तथा रतोपयोगः संभोगावाप्तिः संसूच्यते । सम्यग्ज्ञाप्यत इत्यर्थः ॥

काचिद्विभूषयति दर्पणसक्तहस्ता
बालातपेषु वनिता वदनारविन्दम् ।

---

१. 'व्यतिषिक्त;' 'व्यतिसक्त;' 'व्यतिसङ्ग'. २. 'शरानुविद्धः'. ३. 'दन्तविघातचिह्नैः'. ४. 'रतोपभोगो'. ५ 'बाला विलोलचिकुरं वदनारविन्दम्'.

दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमवकृष्य[1] निरीक्षते च ॥ १३ ॥

काचिदिति ॥ दर्पण आदर्शे सक्तः संसक्तो हस्तः करो यस्याः सा तथोक्ता । 'दर्पणे मुकुरादर्शौ' इत्यमरः । काचिद्वनिता स्त्री बालातपेषु कोमलोष्णेषु । स्थित्वेति शेषः । वदनारविन्दं मुखकमलं विभूषयति । अलंकरोतीत्यर्थः । किंच । प्रियतमेन कान्तेन निपीतः सारो रसो यस्य तं तथोक्तं दन्ताग्रै रदनाग्रैर्भिन्नः खण्डितस्तथोक्तो दन्तच्छदमोष्ठमवकृष्याकृष्य निरीक्षते । अवलोकयतीत्यर्थः । वसन्ततिलकावृत्तमेतत् । लक्षणं तु पूर्वमुक्तम् ॥

अन्या[2] प्रकामसुरतश्रमखिन्नदेहा
रात्रि[3]प्रजागरविपाटलनेत्रपद्मा[4] ।
स्रस्तां[5]सदेशलुलिताकुलकेशपाशा
निद्रां प्रयाति मृदुसूर्यकरा[6]भितप्ता ॥ १४ ॥

अन्येति ॥ प्रकाममत्यन्तं सुरतश्रमेण संभोगक्लेशेन खिन्नः खेदान्वितो देहः शरीरं यस्याः सा तथोक्ता । रात्रौ निशायां यः प्रजागरो जागरणं तेन विपाटले विशेषेण पाटलवर्णे नेत्रपद्मे नयनारविन्दे यस्याः सा तथोक्ता । स्रस्तो विश्लथितोऽसदेशः स्कन्धप्रदेशो लुलितोऽत्यन्तमाकुलो व्याकुलः केशपाशः कबरीबन्धो यस्याः सा तथोक्ता । मृदुभिः कोमलैः सूर्यकरैस्तरणिकिरणैरभितप्तान्या काचित्स्त्री निद्रां प्रयाति प्राप्नोति ॥

---

१. 'अपकृष्य'. २ 'अन्याः'. ३. 'नक्त'; 'नक्तम्'. ४. 'पद्माः'. ५. 'शय्यान्त'. ६. 'अभितप्ताः'.

निर्माल्यदाम परिमुक्तमनोज्ञगन्धं
मूर्ध्नोऽपनीय घननीलशिरोरुहान्ताः ।
पीनोन्नतस्तनभरानतगात्रयष्ट्यः
कुर्वन्ति केशरचनामपरास्तरुण्यः[1] ॥ १५ ॥

निर्माल्येति ॥ घनवन्मेघवद्घनाः संकीर्णा वा नीलाः कृष्णवर्णाः शिरोरुहान्ताः केशप्रान्ता यासां तास्तथोक्ताः । पीनाः पुष्टा उन्नताश्च ये स्तनाः कुचास्तेषां भरेण भारेण नता नम्रा गात्रयष्ट्यः शरीरलता यासां तास्तथोक्ता अपरा अन्यास्तरुण्यो युवत्यः परिमुक्तस्त्यक्तो मनोज्ञः सुन्दरो गन्धो येन तत्तथोक्तम् । निर्माल्यदाम निर्माल्यभूतां स्रजं मूर्ध्नः शिरसोऽपनीय दूरीकृत्य केशानां कुन्तलानां रचनां कुर्वन्ति ॥

अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधरचारुशोभा[2] ।
कूर्पासकं[3] परिदधाति नखक्षताङ्गी[4]
व्यालम्बिनीललिताकुञ्चिताक्षी[5] ॥ १६ ॥

अन्येति ॥ प्रियेण कान्तेन परिभुक्तं संभुक्तं गात्रं शरीरमवेक्ष्य दृष्ट्वा हर्षेणानन्देनान्विता युक्ता । विरचिता कृताधर ओष्ठे चारुशोभा नखकृतरेखा दन्तक्षतैर्वा यस्याः सा तथोक्ता । नखैर्नखैः क्षतं कारितमङ्गं शरीरं यस्याः सा तथोक्ता । व्यालम्बिनीभिर्लम्बद्भिर्नीलवर्णैर्ललितैः सुन्दरैरलकैः कुन्तलैः कुञ्चिते आकुञ्चिते अक्षिणी यस्याः सा तथोक्तान्या स्त्री

१. 'अबलाः'. २. 'रागशोभा'; 'गण्डशोभा'. ३. 'रक्तांशुकम्'. ४. 'नवं नताङ्गी'. ५. 'व्यालम्बिताङ्गुलिलता'.

कूर्पासकं चोलम् । 'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः । परिदधाति । धत्त इत्यर्थः ॥

अन्याश्चिरं सुरतकेलिपरिश्रमेण
[1]खेदं गताः प्रशिथिलीकृतगात्रयष्ट्यः ।
सं[2]हृष्यमाणपु[3]लकोरुप[4]योधरान्ता
[5]अभ्यञ्जनं विदधति प्रमदाः [6]सुशोभाः ॥ १७ ॥

अन्या इति ॥ चिरं चिरकालं या सुरतकेलिः संभोगक्रिया तया यः परिश्रमः क्लेशस्तेन खेदं गताः प्राप्ता अत एव प्रकर्षेण शिथिलीकृता गात्रयष्ट्यो यासां तास्तथोक्ताः । संहृष्यमाणः पुलको रोमाञ्चो यस्मिंस्तादृश ऊरुः पीनश्च पयोधरान्तः पयोधरप्रान्तो यासां तास्तथोक्ताः । सुष्ठु समीचीना शोभा यासां तास्तथोक्ताः । अन्याः प्रमदाः स्त्रियोऽभ्यञ्जनमभ्यङ्गं सुगन्धतैलादिना विदधति कुर्वन्तीत्यर्थः ॥

बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसी[7]मा ।
[8]सततमतिमनोज्ञः क्रौञ्चमालापरीतः
प्रदिशतु हिमयुक्तः का[9]ल एषः [10]सुखं वः ॥ १८ ॥

बहुगुणेति ॥ बहुगुणै रमणीयः सुन्दरो योषितां स्त्रीणां चित्तहारी मनोहारी परिणतैः परिपक्वैर्बहुभिः शालिभि-

---

१. 'खेदम्'. २. 'संपीड्यमान'. ३. 'विपुलोरु'. ४. 'पयोधरार्ताः'. ५. 'प्रत्यञ्जनम्'; 'नेत्राञ्जनम्'. ६. 'सुशोभम्'. ७. 'सीमः'. ८. 'विनिपतिततुषारः क्रौञ्चनादोपगीतः'. ९. 'त्वेषकालम्'. १०. 'प्रियम्'.

व्याकुला ग्रामसीमा ग्रामान्ताः प्रान्ता यस्मिन्स तथोक्तः । सततं निरन्तरमतिमनोज्ञोऽतिसुन्दरः क्रौञ्चमालाभिः क्रौञ्च-पङ्क्तिभिः परीतो युक्तो हिमयुक्त एष कालो हेमन्तकालो वः सुखं प्रदिशतु । ददात्वित्यर्थः ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये हेमन्तवर्णनं नाम चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

अथ क्रमप्राप्तं शिशिरं वर्णयति—

प्ररूढशाल्यंशुचयैर्मनोहरं[1]
क्वचित्स्थित[2]क्रौञ्चनिनादराजितम्[3] ।
प्रकामकामं[4] प्रमदाजनप्रियं
वरोरु कालं शिशिराह्वयं शृणु ॥ १ ॥

प्ररूढेति ॥ वरावुत्कृष्टावूरू जङ्घे यस्यास्तस्याः संबोधने हे वरोरु, प्ररूढानां प्रवृद्धानां शालीनामंशुचयैर्मनोहरम् । क्वचित्पुस्तके 'प्ररूढशालीक्षुचयावृतक्षितिम्' इति पाठः । स तु रूढ एव । तत्र प्ररूढानां प्रवृद्धानां शालीनां धान्याना-मिक्षूणां च चयैः समूहैरावृताच्छादिता क्षितिः पृथ्वी यस्मि-न्निति समासः । क्वचित्कुत्रचिद्वृक्षशाखायां स्थितानामुपवि-

---

१. 'प्ररूढशालीक्षुचयैर्मनोहरम्'. २. 'क्वचित्स्थितम्'; 'सुस्थस्थित'. ३. 'शोभितम्'. ४. 'काम'.

ष्टानां क्रौञ्चानां पक्षिविशेषाणां निनादैर्विरुतै राजितं शोभितं तं तथोक्तम् । प्रकाममत्यन्तं कामो यस्मिंस्तं तथोक्तम् । प्रमदाजनस्य स्त्रीजनस्य प्रियमिष्टं शिशिर इत्याह्वाख्या यस्य तं तथोक्तं कालं समयं शृणु । आकर्णयेत्यर्थः । वंशस्थवृत्तमेतत् ॥ तल्लक्षणं तु पूर्वमुक्तम् ॥

निरुद्धवातायनमन्दिरोदरं
हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांस्यबलाः सयौवनाः
प्रयान्ति कालेऽत्र[1] जनस्य सेव्यताम् ॥ २ ॥

निरुद्धेति ॥ अत्र काले शिशिरकाले निरुद्धान्यवरुद्धानि वातायनानि गवाक्षा यस्य तादृशस्य मन्दिरस्योदरं गर्भदेशः । 'वातायनं गवाक्षः स्यात्' इत्यमरः । हुताशनोऽग्निर्भानुमतः सूर्यस्य गभस्तयः किरणाः । गुरूणि वासांसि च वस्त्राणि । सयौवनास्तारुण्यसहिता अबलाः स्त्रियो जनस्य लोकस्य सेव्यतां प्रयान्ति प्राप्नुवन्तीति वचनविपरिणामेनान्वयः ॥

न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला
जनस्य चित्तं रमयन्ति सांप्रतम् ॥ ३ ॥

नेति ॥ सांप्रतमिदानीं चन्द्रमरीचय इव चन्द्ररश्मय इव शीतलं शिशिरं चन्दनं जनस्य चित्तं न रमयति । तथा

1. 'अद्य'.

शरदिन्दुवन्निर्मलं स्वच्छं हर्म्यतलं हर्म्यपृष्ठं प्रासादतलं जनस्य चित्तं न रमयति। तथा सान्द्रेण घनेन तुषारेण हिमेन शीतलाः शिशिरा वायवः पवना अपि जनस्य चित्तं न रमयन्तीत्यर्थः ॥

तुषारसंघातनिपातशीतला[1]:
शशाङ्कभाभिः शिशिरीकृता[2]: पुनः ।
विपाण्डुतारागणजिह्म[3]भूषिता
जनस्य सेव्या न भवन्ति रात्रयः ॥ ६ ॥

तुषारेति ॥ तुषारसंघातस्य हिमसमूहस्य निपातेन शीतलाः। पुनः शशाङ्कस्य चन्द्रस्य भाः कान्तयस्ताभिः शिशिरीकृताः। एतेन शैत्याधिक्यं सूचितम् । विपाण्डुना पाण्डुरवर्णेन तारागणेन नक्षत्रसमूहेन जिह्मं वक्रं यथा भवति तथा भूषिताः शोभिता रात्रयः शर्वर्यो जनस्य लोकस्य सेव्याः सेवितुमुपभोक्तुं योग्या न भवन्तीत्यर्थः ॥

गृहीतताम्बूलविलेपनस्रजः
सुखास[4]वामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवा[5]सितं
विशन्ति श[6]य्यागृहमुत्सु[7]काः स्त्रियः ॥ ५ ॥

गृहीतेति ॥ गृहीतास्ताम्बूलं च विलेपनं च कस्तूर्यादि-स्रजः कुसुममालाश्च याभिस्तास्तथोक्ताः। सुखयतीति सुखः सुखकरो य आसवो मधु तेनामोदितं सुगन्धितं वक्त्रपङ्कजं

---

१. 'शीतला'. २. 'शिशिरीकृता'. ३. 'चारुभूषणा'. ४. 'सुरासवा'; 'पुष्पासवा'. ५. 'वासिताम्'. ६. 'शय्याम्'. ७. 'उत्सुकस्त्रियः'.

मुखकमलं यासां तास्तथोक्ताः । उत्सुका उत्कण्ठिताः स्त्रियः प्रकाममत्यन्तं कालागुरोः कृष्णागुरोर्धूपेन वासितं शय्यागृहं शय्यामन्दिरं विशन्ति । प्रविशन्तीत्यर्थः ॥

**कृतापराधान्बहुशो[1]ऽपि तर्जिता-**
**न्सवेपथून्साध्वसलुप्त[2]चेतसः ।**
**निरीक्ष्य भर्तॄन्सुरताभिलाषिणः**
**स्त्रियोऽपराधान्समदा विसस्मरुः[3] ॥ ६ ॥**

कृतापराधानिति ॥ समदा मदसहिताः स्त्रियः कामिन्यः कृतोऽपराधो यैस्तथोक्तान् अत एव बहुशो बहुवारमपि तर्जितान्वेपथुभिः कम्पैः सहिता युक्तास्तांस्तथोक्तान् । साध्वसं भयम् । 'साध्वसं भयम्' इत्यमरः । पूर्वकृतापराधमूलकं तेन लुप्तं विनष्टं चेतश्चित्तं येषां ते तथोक्तान्भर्तॄन्प्रियान्सुरताभिलाषिणः संभोगाभिलाषिणो निरीक्ष्य वीक्ष्य अपराधान्पूर्वकृतान्विसस्मरुः । अपराधस्मरणेन विप्रियं नोचुरित्यर्थः । वंशस्थवृत्तमेतत् । तल्लक्षणं तूक्तम् ॥

**प्रकामकामैर्युवभिः[4] सनिर्दयं**
**निशासु दीर्घास्वभिरामिताश्चिरम्[5] ।**
**भ्रमन्ति[6] मन्दं[7] श्रमखेदितोरसः[8]**
**क्षपावसाने नवयौवनाः स्त्रियः ॥ ७ ॥**

---

१. 'अभितर्जितान्'. २. 'मन्द'. ३. 'न सस्मरुः'. ४. 'सुरतेऽतिनिर्दयम्'; 'युवभिः सुनिर्दयम्'. ५. 'दीर्घास्वभिभाविता भृशम्'; 'गाढं दयितैश्चिरं दृढम्'. ६. 'भवन्ति'; 'धमन्ति'. ७. 'मन्द'. ८. 'खेदितोरवः'; 'मोदितोरसः'; 'खेदितोरवः'.

प्रकामकामैरिति ॥ प्रकाममत्यन्तं कामोऽभिलाषो येषां तैस्तथोक्तैः । कामातुरैरित्यर्थः । युवभिस्तरुणैर्दीर्घासु निशासु रात्रिषु चिरं चिरकालं निर्दयं निर्दयतया दयाभावेन सहितं यथा भवति तथाभिरामिताः क्रीडिताः । अत एव श्रमेण परिश्रमेण खेदितं खिन्नमुरो हृदयं यासां तास्तथोक्ता नवयौवनास्तरुण्यः स्त्रियः क्षपायाः क्षणदाया अवसानं समाप्तिस्तस्मिन् । प्रभात इत्यर्थः । मन्दं मन्थरं भ्रमन्ति भ्रमणं कुर्वन्तीत्यर्थः ॥

मनोज्ञकूर्पासकपीडितस्तनाः[1]
सरागकौशेयकभूषितोरसः[2] ।
निवेशितान्तःकुसुमैः शिरोरुहै-
र्विभूषयन्तीव हिमागमं स्त्रियः ॥ ८ ॥

मनोज्ञेति ॥ मनोज्ञेन सुन्दरेण कूर्पासकेन चोलेन पीडिताः स्तना यासां तास्तथोक्ताः । सरागं रागसहितं यत्कौशेयमेव कौशेयकं कृमिकोशोत्थं वस्त्रं तेन भूषितं शोभितमुरो हृदयं यासां तास्तथोक्ताः स्त्रियो निवेशितानि निविष्टान्यन्तरन्तर्भागे कुसुमानि येषां ते तैस्तथोक्तैः शिरोरुहैः केशैर्हिमागमं शीतकालं विभूषयन्तीवेत्युत्प्रेक्षा ॥

पयोधरैः कुङ्कुमरागपिञ्जरैः
सुखोपसेव्यैर्नवयौवनोष्मभिः[3] ।
विलासिनीभिः[4] परिपीडितोरसः[5]
स्वपन्ति शीतं परिभूय कामिनः ॥ ९ ॥

---

१. 'कूर्पासनिपीडित'. २. 'कौशेयविभूषितोरसः'. ३. 'यौवनोत्सवाः'; 'यौवनोत्सवः' ४. 'विलासिनीनाम्'. ५. 'भृशम्'.

पयोधरैरिति ॥ विलासिनीभिः कुङ्कुमस्य केसरस्य रागेण पिञ्जरैः पीतवर्णैः । सुखेनोपसेव्या उपभोग्यास्तैस्तथोक्तैः । नवो नूतनो यौवनस्य तारुण्यस्योष्मौष्ण्यं येषु तैस्तथोक्तैः पयोधरैः कुचैः परिपीडितमुरो हृदयं येषां ते तथोक्ताः कामिनो विलासिनः शीतं हिमं परिभूयाभिभूय स्वपन्ति । निद्रां कुर्वन्तीत्यर्थः ॥

सुगन्धिनिश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधकम्[1] ।
निशासु हृष्टाः सह कामिभिः स्त्रियः
पिबन्ति मद्यं मदनीयमुत्तमम् ॥ १० ॥

सुगन्धीति ॥ हृष्टा हर्षिताः स्त्रियो युवत्यः सुगन्धिना सुरभिणा निश्वासेन विकम्पितमुत्कम्पितमुत्पलं कुवलयं यस्मिं-स्तत्तथोक्तं मनोहरं सुन्दरं काममत्यन्तं रतेः सुरतस्य प्रबोधकं प्रबोधजनकं मदनीयमुन्मादकरमुत्तममुत्तमजातीयं मद्यं मधु निशासु रात्रिषु कामिभिः प्रियैः सह पिबन्तीत्यर्थः ॥

अपगतमदरागा योषिदेका[2] प्रभाते
कृतनिबिडकुचाग्रा[3] पत्युरालिङ्गनेन ।
प्रियतमपरिभुक्तं वीक्षमाणा स्वदेहं
व्रजति शयनवासाद्वासमन्यद्धसन्ती[4] ॥ ११ ॥

अपगतेति ॥ अपगतो मदरागो यस्याः सा तथोक्ता । पत्युः प्रियस्यालिङ्गनेन परिरम्भणेन कृतं निबिडं सान्द्रं कुचाग्रं स्तनाग्रं यस्याः सा तथोक्ता । प्रियतमेन कान्तेन

---

१. 'प्रबोधनम्'. २. 'एव'. ३. 'कृतविनतकुचाग्रा'; 'कुचनिबिड-कुचा या'. ४. 'अन्यं हसन्ती'; 'अन्यद्व्रजन्ती'.

परिभुक्तं स्वं देहं निजं शरीरं वीक्षमाणा पश्यन्ती हसन्ती स्मेराननैका योषित्स्त्री प्रभाते प्रातःकाले शयनवासादन्यद्वासं मन्दिरं व्रजतीत्यर्थः । मालिनीवृत्तमेतत् । लक्षणं तूक्तम् ॥

**अगुरुसुरभिधूपामोदितं केशपाशं**
**गलितकुसुममालं तन्वती कुञ्चिताग्रम् ।**
**त्यजति गुरुनितम्बा निम्नमध्यावसाना**
**उषसि शयनमन्या कामिनी चारुशोभाम् ॥१२॥**

अगुर्विति ॥ अगुरोः सुरभिणा सुगन्धिना धूपेनामोदितः संजातसौरभस्तं तथोक्तम् । गलिता स्रस्ता कुसुममाला यस्य तं तथोक्तम् । कुञ्चिताग्रं कुञ्चिता वक्रभावापन्ना अग्रा अग्रभागा यस्य तादृशं केशपाशं केशसमूहं तन्वती । गुरुनितम्बा गुरू नितम्बौ यस्याः सा तथोक्ता । निम्नं कृशं मध्यावसानं मध्यप्रान्तो यस्याः सा तथोक्ता । चारुशोभा सुन्दरशोभान्या कामिनी स्त्र्युषसि प्रातःकाले शयनं पर्यङ्कम् । 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः । त्यजति मुञ्चतीत्यर्थः । क्वचित्पुस्तके 'निम्नमध्यावसन्ना' इति पाठः । तदर्थस्तु निम्नेन मध्येनावसन्ना खिन्नेति निम्नमध्यावसन्ना । 'उषसि' इत्यत्र विवक्षाप्राप्तत्वान्न संहिता । तदुक्तम्—'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥' इति ॥

**कनककमलकान्तैः सद्य एवाम्बुधौतैः**
**श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः ।**

---

१. 'आमोदितान्'. २. 'केशपाशान्'. ३. 'मालान्'. ४. 'कुञ्चिताग्रं वहन्ती'; 'धुन्वती कुञ्चिताग्रान्'. ५. 'निम्ननाभिः सुमध्या'. ६. 'शयनवासम्'; 'शयनमध्या'. ७. 'कामशोभा'; 'कामशोभाम्'. ८. 'चारुबिम्बाधरोष्ठी'. ९. 'श्रवणतटनिषिक्तैः'; 'स्रवदमृतनिषक्तैः'.

उषसि वदनबिम्बैरंससंसक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥१३॥

कनकेति ॥ सद्य एव तत्कालमेवाम्बुधौतैरम्बुना जलेन धौतानि प्रक्षालितानि तैरत एव कनककमलकान्तैः कनकस्य सुवर्णस्य कमलमम्बुजमिव कान्तैः सुन्दरैर्वदनबिम्बैः। 'चारुताम्राधरोष्ठैः' इति पाठे तु चारवः सुन्दराश्च ते ताम्रा आरक्ताश्च तेऽधरोष्ठाश्च तैः। श्रवणतटे कर्णप्रान्ते निषक्तैर्निषण्णैः। पाटलः पाटलवर्ण उपान्तः प्रान्तो येषां तादृशानि च तानि नेत्राणि लोचनानि तैः। 'लोचनं नयनं नेत्रम्' इत्यमरः। अंसे स्कन्धे संसक्ताः संलग्ना ये केशाः कुन्तलास्तैश्चोपलक्षिता योषितः स्त्रियोऽद्येदानीमुषसि प्रातःकाले गृहमध्ये श्रिय इव लक्ष्म्य इव संस्थिताः ॥

पृथुजघनभरार्ताः किंचिदानम्रमध्याः
स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः।
सुरतसमयवेशं नैशमाशु प्रहाय
दधति दिवसयोग्यं वेषमन्यास्तरुण्यः ॥ १४ ॥

पृथ्विति ॥ पृथोः स्थूलस्य जघनस्य कट्यग्रभागस्य भरेणार्ताः पीडिताः। 'क्लीबे तु जघनं पुरः' इत्यमरः। किंचिदीषदानम्रं नतं मध्यं यासां तास्तथोक्ताः। स्तनानां कुचानां भरेण भारेण यः परिखेदः श्रमस्तस्मान्मन्दमन्दं मन्थरं व्रजन्त्यो गच्छन्त्योऽन्यास्तरुण्यः कामिन्यो निशि भवं

१. 'संयुक्त'. २. 'संस्मिता'. ३. 'मध्या'. ४. 'स्तनयुग'. ५. 'व्रजन्त्याः'. ६. 'सुरतसमयखेदम्'; 'सुरतशयनवेषम्'. ७. 'अङ्गे'; 'अन्यद्'. ८. 'एषा'.

नैशं सुरतसमये संभोगकाले यो वेश आकारस्तमाशु झटिति प्रहाय त्यक्त्वा दिवसयोग्यं वेषं दधतीत्यर्थः ॥

नखपदचितभागान्वीक्षमाणाः[1] स्तनाग्रा-[2]
नधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः ।
अभिमतरसमेतं[3] नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥ १५ ॥

नखपदेति ॥ नखपदैर्नखक्षतैश्चिता व्याप्ता भागा येषां तांस्तथोक्तान्स्तनाग्रान्कुचाग्रान्वीक्षमाणा आलोकयन्त्यः । दन्तभिन्नं रदनखण्डितमधरः किसलयमिव पल्लवमिवेति तस्याग्रं स्पृशन्त्यः स्पर्शं कुर्वन्त्य एतमभितो मनोऽभिलाषि यो रसस्तं नन्दयन्त्योऽभिनन्दयन्त्यस्तरुण्यो विलासवत्यः सवितुः सूर्यस्योदयकाले प्रभात आननानि मुखानि भूषयन्ति । अलंकुर्वन्तीत्यर्थः ॥

प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकंदर्पदर्पः[4][5] ।
प्रियजनरहितानां चित्तसंतापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम्[6] ॥१६॥

प्रचुरेति ॥ प्रचुरो बहुलो गुडविकारः खण्डशर्करादिर्यस्मिंस्तथोक्तो जातः । स्वादवो ये शालयो धान्यानीक्षव इक्षुदण्डाश्च तै रम्यो रमणीयः । प्रबला अत्यधिकाः सुरतकेलयो यत्र तथाविधः । जातः संजातः कंदर्पदर्पो मन्मथा-

---

१. 'नखपदकृतभङ्गान्'. २. 'स्तनान्तान्'. ३. 'रतवेशम्'. ४. 'प्रसृत'. ५. 'शान्त'. ६. 'तेऽस्तु'.

धिक्यं यस्मिन्स तथोक्तः। प्रियजनेन कान्तजनेन रहितानाम्। विरहिणीनामित्यर्थः। चित्तसंतापस्य हेतुः कारणमेष शिशिरसमयः शीतकालो वो युष्माकं श्रेयसे कल्याणाय नित्यं सदास्त्वित्यर्थः॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये शिशिरवर्णनं नाम पञ्चमः सर्गः।

---

## षष्ठः सर्गः।

अथ क्रमप्राप्तं वसन्तकालं वर्णयति—

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमालाविलसद्धनुर्गुणः।
मनांसि [1]वेद्धुं [2]सुरतप्रसङ्गिनां
वसन्तयोद्धा[3] समुपागतः प्रिये॥ १॥

प्रफुल्लेति॥ हे प्रिये, प्रफुल्लस्य चूतस्याम्रवृक्षस्याङ्कुरा एव तीक्ष्णा निशिताः सायका बाणा यस्य स तथोक्तः। द्विरेफाणां भ्रमराणां माला पङ्क्तिरेव विलसन्धनुर्गुणो यस्य स तथोक्तो वसन्तयोद्धा सुरतप्रसङ्गिनां मनांसि वेद्धुं विदारयितुं समुपागतः आगत इत्यर्थः। वंशस्थवृत्तमेतत्। लक्षणं तूक्तम्॥

द्रुमाः सपुष्पाः सलिलं स[4]पद्मं
स्त्रियः सकामाः [5]पवनः [6]सुगन्धिः।

---

१. 'भेत्तुम्'. २. 'सुरतोत्सुकानाम्'. ३. 'योधः'. ४. 'सुपद्मम्'. ५. 'पवनाः'. ६. 'सुगन्धयः'.

सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥ २ ॥

द्रुमा इति ॥ हे प्रिये, वसन्ते वसन्तकाले सर्वं चारुतरमतिरमणीयमस्ति । सर्वं किं तदाह—द्रुमा इति । द्रुमा वृक्षाः सपुष्पाः कुसुमसहिताः । सलिलं जलं सपद्मं कमलसहितम् । स्त्रियो वनिताः सकामाः समन्मथाः । पवनो वायुः सुगन्धिः कुसुमसंसर्गात्सुरभिः । प्रदोषाः संध्यासमयाः सुखाः सुखकराः । दिवसाश्च रम्या रमणीया इति । उपजातिवृत्तमेतत् । लक्षणं तूक्तम् ॥

वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां[1]
ददाति सौभाग्यमयं[2] वसन्तः ॥ ३ ॥

वापीति ॥ अयं वसन्तो वसन्तकालो वापीजलानां दीर्घिकाजलानाम् । तत्र जलक्रीडावशात् मणिमेखलानां मणिखचितमेखलानाम् । स्त्रीभिः कटिप्रदेशे धारणात् । शशाङ्कभासां चन्द्रकान्तीनाम् । रात्रौ संसेव्यत्वात् । प्रमदाजनानां वनिताजनानाम् । सुखभोगाम् । कुसुमैः पुष्पैरन्विता युक्तास्तेषां तथोक्तानां चूतद्रुमाणामाम्रवृक्षाणाम् । स्त्रीकर्णावतंसविषयपल्लवत्वात् । सौभाग्यं सुभगतां ददातीत्यर्थः ॥

कुसुम्भरागारुणितैर्दुकूलै-
र्नितम्बबिम्बानि विलासिनीनाम्[3] ।

---

१. 'कुसुमानतानाम्'. २. 'सौरभ्यम्'. ३. 'नितम्बिनीनाम्'.
२–३ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

ईषत्तुषारैः कृतशीतहर्म्यः सुवासितं चारुशिरः सचम्पकैः ।
कुर्वन्ति नार्योऽपि वसन्तकाले स्तनं सहारं कुसुमैर्मनोहरैः ॥

[1]रक्तांशुकैः कुङ्कुमरा[2]गगौरै-
रलंक्रियन्ते स्तनमण्डलानि ॥ ४ ॥

कुसुम्भेति ॥ कुसुम्भस्य रागेणारुणितानि रक्तानि तैस्तथोक्तैर्दुकूलैर्वस्त्रैर्विलासिनीनां विलासवतीनां नितम्बबिम्बानि। कुङ्कुमस्य केसरस्य रागेण गौराः पिञ्जरास्तैस्तथोक्तै रक्तांशुकै रक्तवस्त्रैः स्तनमण्डलानि कुचमण्डलान्यलंक्रियन्त इत्यर्थः ॥

कर्णेषु योग्यं नवकर्णिकारं
[3]चलेषु नीलेष्वलकेष्व[4]शोकम् ।
[5]पुष्पं च फुल्लं [6]नवमल्लिकायाः
[7]प्रयाति कान्तिं [8]प्रमदाजनानाम् ॥ ५ ॥

कर्णेष्विति ॥ प्रमदाजनानां वनिताजनानां कर्णेषु श्रवणेषु योग्यमवतंसयोग्यं नवं नूतनं कार्णिकारं कर्णिकारकुसुमम्। 'अथ द्रुमोत्पलः। कर्णिकारः परिव्याधः' इत्यमरः। चलेषु चञ्चलेषु नीलेषु कृष्णवर्णेष्वलकेष्वशोकं वञ्जुलकुसुमम्। 'वञ्जुलोऽशोके' इत्यमरः। फुल्लं संफुल्लं नवमल्लिकायाः पुष्पं च। जात्यभिप्रायेणैकवचनम्। कान्तिं शोभां प्रयाति। प्राप्नोतीत्यर्थः ॥

स्तनेषु हाराः सितचन्दनार्द्रा
भुजेषु [9]सङ्गं वलयाङ्गदानि ।

---

१. 'तन्वंशुकैः'. २. 'पिञ्जरैः'. ३. 'स्तनेषु हाराः'. ४. 'अशोकः'. ५. 'शिखासु फुल्लाः'; 'शिखासु मालाः'. ६. 'नवमालिकाश्च'. ७. 'प्रयान्ति शोभाम्'. ८. 'प्रमदाजनस्य'. ९. 'कम्बूवलयाङ्गदानि'.

प्रयान्त्यनङ्गातुरमानसानां
नितम्बिनीनां जघनेषु काञ्च्यः ॥ ६ ॥

स्तनेष्विति ॥ अनङ्गेन मन्मथेनातुरं पीडितं मानसं यासां तासां तथोक्तानां नितम्बिनीनां नितम्बवतीनां स्तनेषु कुचेषु सितचन्दनेन धवलचन्दनद्रवेणार्द्रा हारा मुक्ताहाराः भुजेषु बाहुषु वलयाङ्गदानि कटककेयूराणि । जघनेषु काञ्च्यः सङ्गं संबन्धं प्रयान्ति । प्राप्नुवन्तीत्यर्थः ॥

सपत्रलेखेषु विलासिनीनां
वक्त्रेषु हेमाम्बुरुहोपमेषु ।
रत्नान्तरे[2] मौक्तिकसङ्ग[3]रम्यः
स्वेदा[4]गमो विस्तरतामुपैति[6] ॥ ७ ॥

सपत्रेति ॥ रत्नान्तरे रत्नानां मध्ये मौक्तिकानां मुक्ताफलानां सङ्गेनैव रम्यो रमणीयः स्वेदागमो घर्मनिर्गमो विलासिनीनां विलासवतीनां स्त्रीणां सपत्रलेखेषु पत्रलेखा कपोलादौ कस्तूर्यादिरचितावली तया सहितेषु हेमाम्बुरुहेण काञ्चनपद्मेनोपमेषु वक्त्रेषु मुखेषु विस्तरतां विस्तारभावमुपैति । प्राप्नोतीत्यर्थः ॥

उच्छ्वासयन्त्यः श्लथबन्धनानि
गात्राणि कंदर्पसमाकुलानि ।
समीपवर्तिष्व[5]धुना प्रियेषु
समुत्सुका एव भवन्ति नार्यः ॥ ८ ॥

उच्छ्वासयन्त्य इति ॥ श्लथानि शिथिलानि बन्धनानि

---

१. 'निःशङ्कमनङ्गसौख्यम्'; 'निःसङ्गमनङ्गसौख्यम्'. २. 'स्तनान्तरे' ३. 'सङ्गजातः'. ४. 'स्वेदोद्गमः'. ५. 'अपि कामुकेषु'. ६ ऋतु.

कञ्चुक्यादीनां येषु तानि तथोक्तानि कंदर्पेणानङ्गेन समाकुलानि व्याकुलानि । 'कंदर्पो दर्पकोऽनङ्गः' इत्यमरः । गात्राणि शरीराण्युच्छ्वासयन्त्यो नार्यः स्त्रियोऽधुना वसन्तकाले समीपवर्तिषु निकटस्थितेषु प्रियेषु कान्तेषु समुत्सुका उत्कण्ठिता एव भवन्ति । जायन्त इत्यर्थः ॥

**तनूनि पाण्डूनि [1]समन्थराणि**
**मुहुर्मुहुर्जृम्भणतत्पराणि ।**
**अङ्गान्यनङ्गः प्रमदाजनस्य**
**करोति लावण्य[2]ससंभ्रमाणि ॥ ९ ॥**

तनूनीति ॥ अनङ्गः कामः प्रमदाजनस्य स्त्रीजनस्याङ्गानि गात्राणि तनूनि कृशानि पाण्डूनि पाण्डुवर्णानि समन्थराणि जडीभूतानि मुहुर्मुहुर्वारंवारं जृम्भणतत्पराणि जृम्भणे प्रसितानि । 'तत्परे प्रसितासक्तौ' इत्यमरः । लावण्येन सौन्दर्येण ससंभ्रमाणि संवेगसहितानि । 'समौ संवेगसंभ्रमौ' इत्यमरः । करोतीत्यर्थः ॥

**नेत्रेषु [3]लोलो [4]मदिरालसेषु**
**गण्डेषु पाण्डुः [5]कठिनः स्तनेषु ।**
**मध्येषु [6]निम्नो जघनेषु पीनः**
**स्त्रीणामनङ्गो बहुधा स्थितोऽद्य ॥ १० ॥**

नेत्रेष्विति ॥ स्त्रीणां युवतीनां मदिरयालसान्यालस्ययुक्तानि तेषु तथोक्तेषु नेत्रेषु लोचनेषु । 'लोचनं नयनं नेत्रम्' इत्यमरः । लोलश्चञ्चलः । गण्डेषु कपोलेषु पाण्डुः पाण्डुवर्णः ।

---

१. 'मदालसानि'. २. 'रसोत्सुकानि'. ३. 'लोलम्'; 'अलोलः'. ४. मदिरारसेषु'. ५. 'कठिनस्तनेषुं'. ६. 'नम्रः'.

स्तनेषु कुचेषु कठिनः । मध्येषु मध्यभागेषु निम्नो गभीरः । जघनेषु पीनः पुष्ट इत्यनेन प्रकारेणानङ्गः कामोऽद्य बहुधा बहुप्रकारेण स्थितः । उपस्थित इत्यर्थः ॥

अङ्गानि निद्रालसविभ्रमाणि[1]
वाक्यानि किंचिन्मदलालसानि[2] ।
भ्रूक्षेपजिह्मानि च वीक्षितानि
चकार कामः प्रमदाजनानाम्[3] ॥ ११ ॥

अङ्गानीति ॥ कामः प्रमदाजनानां कामिनीनामङ्गानि शरीराणि निद्रयालसा विभ्रमाः शृङ्गारवेषा येषु तानि तथोक्तानि । वाक्यानि किंचिदीषन्मदेन लालसानि चाटूनि । वीक्षितानि प्रेक्षणानि भ्रूक्षेपेण जिह्मानि कुटिलानि च चकार । कृतवानित्यर्थः ॥

प्रियङ्गुकालीयककुङ्कुमाक्तं[4]
स्तनेषु[5] गौरेषु विलासिनीभिः ।
आलिप्यते चन्दनमङ्गनाभि-
र्मदालसाभिर्मृगनाभियुक्तम् ॥ १२ ॥

प्रियङ्ग्विति ॥ विलासिनीभिर्विलासवतीभिर्मदेनालसा आलस्ययुक्तास्ताभिस्तथोक्ताभिरङ्गनाभिः स्त्रीभिर्गौरेषु गौरवर्णेषु स्तनेषु कुचेषु प्रियङ्गुः श्यामा लता, कालीयकं जायकम्, कुङ्कुमं केसरं च तैराक्तं युक्तं मृगनाभियुक्तं कस्तूरीयुक्तं चन्दनमालिप्यते । लाप्यत इत्यर्थः ॥

---

१. 'विह्वलानि'. २. 'मदिरालसानि'; 'मदसालसानि'. ३. 'प्रमदोत्तमानाम्'. ४. 'कुङ्कुमालि'. ५. 'स्तनाङ्गरागेषु विसर्जितानि'; 'स्तनाङ्गरागेषु विचर्चितानि'.

गुरूणि वासांसि विहाय तूर्णं
तनूनि लाक्षारसरञ्जितानि ।
सुगन्धिकालागुरुधूपितानि[1]
धत्ते जनः काममदालसाङ्गः[2] ॥ १३ ॥

गुरूणीति ॥ काममदेनालसमङ्गं यस्य स तथोक्तो जनो गुरूणि वासांसि वस्त्राणि तूर्णं सत्वरं विहाय त्यक्त्वा तनूनि सूक्ष्माणि लाक्षारसेन रञ्जितान्यारक्तानि सुगन्धिना सुरभिणा कालागुरुणा कृष्णागुरुणा धूपितानि संजातधूपानि वासांसि धत्ते । दधातीत्यर्थः ॥

पुंस्कोकिलश्चूतरसासवेन[3]
मत्तः प्रियां चुम्बति रागहृष्टः ।
कूजद्द्विरेफो[4]ऽप्ययमम्बुजस्थः[5]
प्रियं प्रियायाः[6] प्रकरोति चाटु[7] ॥ १४ ॥

पुंस्कोकिलेति ॥ रागेण हृष्टो हर्षितश्चूतस्याम्रवृक्षस्य रस एवासवस्तेन मत्तः प्रमत्तः पुंस्कोकिलः प्रियां चुम्बति । अम्बुजे कमले तिष्ठति स तथोक्तः कूजन्गुञ्जन्नयं द्विरेफो भ्रमरोऽपि प्रियाया भ्रमर्याः प्रियमिष्टं चाटु प्रकरोतीत्यर्थः ॥

ताम्रप्रवालस्तबकावनम्रा-[8]
श्चूतद्रुमाः पुष्पितचारुशाखाः ।

---

१. 'शिरांसि'. २. 'कामशरानुविद्धः'. ३. 'चूतरसेन मत्तः प्रियामुखं चुम्बति सादरोऽयम्'. ४. 'गुञ्जन्'. ५. 'अधिकः प्रमत्तः'. ६. 'क्षिप्रम्'. ७. 'चाटुम्'; 'क्षिप्रम्'. ८. 'प्रवालनम्रास्तबकावतंसाः'.

कुर्वन्ति कामं [2]पवनावधूताः
[3]पर्युत्सुकं मानसमङ्गनानाम् ॥ १५ ॥

ताम्रेति ॥ ताम्राणामारक्तानां प्रवालानां पल्लवानां स्तबकैर्गुच्छैरवनम्रा नताः। पुष्पिताः संजातपुष्पा अत एव चारवः सुन्दराः शाखा येषां ते तथोक्ताः । पवनेन वायुनावधूताः कम्पिताश्चुतद्रुमा आम्रवृक्षा अङ्गनानां वनितानां मानसमन्तःकरणं काममत्यन्तं पर्युत्सुकमुत्कण्ठितं कुर्वन्तीत्यर्थः ॥

आ मूलतो विद्रुमराग[4]ताम्रं
[5]सपल्लवाः पुष्पचयं दधानाः ।
कुर्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥ १६ ॥

आ मूलेति ॥ आ मूलतो मूलादारभ्य विद्रुमस्य प्रवालस्य रागवत्ताम्रमारक्तं पुष्पचयं कुसुमसमूहं दधाना धारयन्तः सपल्लवाः पत्रसहिता अशोका वञ्जुलद्रुमा निरीक्ष्यमाणा अवलोक्यमानाः सन्तो नवयौवनानां विप्रयुक्तानां तरुणीनां च हृदयं सशोकं कुर्वन्तीत्यर्थः ॥

मत्तद्विरेफपरिचुम्बितचारुपुष्पा
मन्दानिलाकुलित[6]नम्रमृदुप्रवालाः ।
कुर्वन्ति कामिमनसां सहसोत्सुकत्वं
चूत[7]ाभिरामकलिकाः समवेक्ष्यमाणाः ॥१७॥

---

१. 'कान्ते'. २. 'पवनाभिभूताः'. ३. 'समुत्सुकम्'. ४. 'ताम्राः'. ५. 'सपल्लवम्'. ६. 'चारु'. ७. 'चूताविमुक्तकलिकाः'; 'बालातिमुक्तलतिकाः'.

मत्तेति ॥ मत्तैरुन्मत्तैर्द्विरेफैर्भ्रमरैः परिचुम्बितानि चारूणि सुन्दराणि पुष्पाणि यासां तास्तथोक्ताः मन्दैरनतिप्रबलैरनिलैः पवनैराकुलिता आन्दोलिता नम्रा नम्रीभूता मृदवः कोमलाश्च प्रवाला नवकिसलया यासां तास्तथोक्ताः । चूतस्याम्रस्याभिरामाः सुन्दराः कलिकाः समवेक्ष्यमाणा अवलोक्यमानाः सत्यः कामिमनसां सहसाकस्मादुत्सुकत्वमौत्सुक्यं कुर्वन्तीत्यर्थः ॥ वसन्ततिलकावृत्तमेतत् । लक्षणं तूक्तम् ॥

कान्तामुखद्युतिजुषामपि चोद्गतानां[1]
शोभां परां कुरबकद्रुममञ्जरीणाम् ।
दृष्ट्वा प्रिये सहृदयस्य[2] भवेन्न कस्य
कंदर्पबाणपतनव्यथितं[3] हि चेतः ॥ १८ ॥

कान्तेति ॥ हे प्रिये, कान्तामुखस्य रमणीवदनस्य द्युतिं कान्तिं जुषन्ते सेवन्त इति तेषां तथोक्तानाम् । अपि च किंचोद्गतानां निर्गतानाम् । कुरबकद्रुमा अम्लानवृक्षास्तेष मञ्जरीणाम् । 'अम्लानस्तु महासहा । तत्र शोणे कुरबकः' इत्यमरः । परामुत्कृष्टां शोभां दृष्ट्वावलोक्य कस्य सहृदयस्य चेतोऽन्तःकरणं कंदर्पस्य कामस्य बाणानां शराणां पतनेन निपातेन व्यथितं पीडितं न भवेत् । अपि तु सर्वस्यापीत्यर्थः । हिः पादपूरणार्थः ॥

आदीप्तवह्निसदृशैर्मरुतावधूतैः
सर्वत्र किंशुकवनैः कुसुमावनम्रैः ।

---

१. 'कान्तामुखद्युतिमनोहरमुद्धतानाम्'; 'कान्ताननद्युतिमुषामचिरोद्गतानाम्'; 'नानामुखद्युतिजुषामपि चोद्गतानाम्'. २. 'हि पथिकस्य'. ३. 'निकरैर्व्यथितम्'; 'पतनव्यथनम्'.

सद्योवसन्तसमये हि[1] समाचितेयं
रक्तांशुका नववधूरिव भाति भूमिः ॥१९॥

आदीप्तेति ॥ वसन्तसमये वसन्तकाले सर्वत्रेतस्ततः सद्यः सत्वरमादीप्तेनाभिमुख्येन प्रज्वलितेन वह्निना सदृशास्तैस्तथोक्तैः । आरक्तैरित्यर्थः । मरुता पवनेनावधूताः कम्पितास्तैस्तथोक्तैः । कुसुमैः पुष्पैरवनम्रा नतास्तैस्तथोक्तैः किंशुकवनैः पलाशवृक्षसमुदायैः । 'पलाशे किंशुकः पर्णो वातपोतः' इत्यमरः ॥ समाचितेयं भूमिः पृथिवी रक्तांशुका रक्तवसना नववधूरिव नूतनस्त्रीव भाति शोभत इत्यर्थः । हि निश्चितम् ॥

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं[2]
किं कर्णिकारकुसुमैर्न कृतं[3] नु दग्धम् ।
यत्कोकिलैः[4] पुनरयं[5] मधुरैर्वचोभि-
र्यूनां मनः सुवदनानिहितं निहन्ति[6] ॥२०॥

किं किंशुकैरिति ॥ सुवदनायां रमणीयमुखायां निहितं स्थापितं यूनां तरुणानां मनोऽन्तःकरणं शुकस्य कीरस्य मुखस्य वदनस्य छविरिव छविः कान्तिर्येषां तैस्तथोक्तैः किंशुकैः पलाशकुसुमैः किं न भिन्नं न विदारितम् । कर्णिकारस्य द्रुमोत्पलस्य कुसुमैः पुष्पैश्च । नु निश्चयम् । किं दग्धं न कृतम् । यत्पुनरयं कोकिलो मधुरैर्वचोभिर्वचनैर्निहन्तीत्यर्थः ॥

---

१. 'न समागतेयम्'; 'समुपागते हि'. २. 'दग्धम्'. ३. 'कृतं मनोज्ञम्'; 'हतं मनोज्ञैः'. ४. 'कोकिलाः'. ५. 'पुरुरवैः', 'पुनरमी'. ६. 'सुवदने नियतं हरन्ति'.

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः[1]
कूजद्भिरुन्मदकलानि वचांसि[2] भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥२१॥

पुंस्कोकिलैरिति ॥ कलमव्यक्तमधुरं वचो वचनं येषां तैस्तथोक्तैः । उपात्तः संप्राप्तो हर्षो येषां तैस्तथोक्तैः पुंस्कोकिलैः । उन्मदेनोत्कटमदेन कलान्यव्यक्तमधुराणि वचांसि वचनानि कूजद्भिर्भृङ्गैर्भ्रमरैः । लज्जया त्रपयान्वितं युक्तं सविनयं विनयसहितं वधूनां स्त्रीणां हृदयं कुलगृहेऽपि क्षणेन क्षणमात्रेण पर्याकुलं व्याकुलं कृतमित्यर्थः ॥

आकम्पयन्कुसुमिताः सहकारशाखा
विस्तारयन्परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां[3]
नीहारपातविगमात्सुभगो[4] वसन्ते ॥ २२ ॥

आकम्पयन्निति ॥ वसन्ते वसन्तकाले नीहारस्य हिमस्य यः पातः पतनं तस्य विगमान्नाशात्सुभगः सुन्दरो वायुः पवनः कुसुमिताः संजातकुसुमाः सहकारस्यातिसौरभस्याम्रवृक्षस्य शाखाः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । आकम्पयन्सन् । दिक्षु परभृतस्य कोकिलस्य । 'वनप्रियः परभृतः कोकिलः पिकः' इत्यमरः । वचांसि वचनानि विस्तारयन् । नराणां पुंसां हृदयानि हरन्नपहरन्विवाति विशेषेण वहतीत्यर्थः ॥

---

१. 'फलरसैः समुपात्तहर्षैः'. २. 'विलोचनानि'; 'वचांसि धीरम्'. ३. 'वधूनाम्'. ४. 'विमलः'.

कुन्दैः सविभ्रमवधूहसितावदातै-
रुद्द्योतितान्युपवनानि मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रागेव[1] रागमलिनानि मनांसि यूनाम्[2] ॥२३॥

कुन्दैरिति ॥ सविभ्रमाणि विभ्रमसहितानि यानि वधूहसितानि रमणीहास्यानि तानीवावदातानि धवलानि तैस्तथोक्तैः । 'अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः' इत्यमरः । कुन्दैः कुन्दकुसुमैरुद्द्योतितानि दीप्तानि । शोभितानीति यावत् । मनोहराण्युपवनान्यारामाः । निवृत्तोऽनुरागो यस्मात्तत्तथोक्तं मुनेरपि चित्तं हरन्त्यपहरन्ति । प्रागेव मुनिचित्तापहरणात्प्रागेव रागेण मलिनानि यूनां मनांसि हरन्तीत्यर्थः ॥

आलम्बि[3]हेमरसनाः स्तनसक्तहाराः
कंदर्पदर्पशिथिलीकृतगात्रयष्ट्यः ।
मासे मधौ मधुरकोकिलभृङ्गनादै[4]-
र्नार्यो[5] हरन्ति हृदयं प्रसभं नराणाम् ॥२४॥

आलम्बीति ॥ आलम्बिन्यो लम्बमाना हेमरसनाः सुवर्णमेखला यासां तास्तथोक्ताः । स्तनेषु कुचेषु सक्ताः संसक्ता हारा यासां तास्तथोक्ताः । कंदर्पस्य मन्मथस्य दर्पेणाधिक्येन शिथिलीकृता गात्रयष्ट्यः शरीरलता यासां तास्तथोक्ता नार्यः स्त्रियो मधौ मासे वसन्ते नराणां हृदयं मधुरैः कोकिलाश्च भृङ्गाश्च तेषां नादैर्विरुतैः सह प्रसभमत्यन्तं हरन्तीत्यर्थः ॥

---

१. 'प्रायेण रागचलितानि'; 'प्रागेव रागमखिलानि'. २. 'पुंसाम्'. ३. 'प्रालम्बि'. ४. 'रावैः'. ५. 'रामाः'.

नानामनोज्ञकुसुमद्रुमभूषितान्तां-
न्हृष्टान्यपुष्टनिनदाकुलसानुदेशान् ।
शैलेयजालपरिणद्धशिलातलौघा-
न्दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥२५॥

नानेति ॥ सर्वो जनो लोको नाना नानाजातीया मनोज्ञाः सुन्दरा ये कुसुमद्रुमाः पुष्पवृक्षास्तैर्भूषिताः शोभिता अन्ताः प्रान्तभागा येषां तांस्तथोक्ताम् । हृष्टा हर्षिता येऽन्यपुष्टाः कोकिलास्तेषां निनदैः शब्दैराकुला व्याकुला सानुदेशाः प्रस्थप्रदेशा येषां तांस्तथोक्तान् । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । शैलेयजालेन परिणद्धा व्याप्ताः शिलातलानामोघाः समुदाया येषां तांस्तथोक्तान्क्षितिभृतः पर्वतान्दृष्ट्वा मुदं हर्षमेति । प्राप्नोतीत्यर्थः ॥

नेत्रे निमीलयति रोदिति याति शोकं
घ्राणं करेण विरुणद्धि विरौति चोच्चैः ।
कान्तावियोगपरिखेदितचित्तवृत्ति-
र्दृष्ट्वाध्वगः कुसुमितान्सहकारवृक्षान् ॥२६॥

नेत्रे इति ॥ कान्ताया वियोगेन विरहेण परिखेदिता खिन्ना चित्तवृत्तिर्यस्य स तथोक्तोऽध्वगः पथिकः कुसुमितान्मञ्जरीयुतान्सहकारवृक्षानाम्रवृक्षान् । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । दृष्ट्वावलोक्य नेत्रे लोचने निमीलयति पिधत्ते । तद्दर्शनस्य संतापाधिक्यजनकत्वात् ।

---

१. 'भूषिताग्रान्'; 'भूषिताङ्गान्'. २. 'संधिदेशान्'. ३. 'तलान्तान्'; 'गुहान्तान्'. ४. 'समुपैति सर्वान्'. ५. 'निमीलति'; 'विरोदिति'. ६. 'याति मोहम्'; 'जातमोहान्'. ७. 'प्राणान्'. ८. 'नरः'.

रोदिति क्रन्दति शोकं याति । तत्समये प्रेयसीप्राप्त्यभावात् । घ्राणं करेण हस्तेन विरुणद्धि । तदीयसौगन्ध्यस्यापि संतापाधिक्यजनकत्वात् । उच्चैरुच्चस्वरेण विरौति । हा कान्ते इति शब्दं करोतीत्यर्थः ॥

**समदमधुभराणां कोकिलानां च नादैः**
**कुसुमितसहकारैः कर्णिकारैश्च रम्यः[1] ।**
**इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां**
**तुदति कुसुममासो[2] मन्मथोद्वेजनाय ॥ २७ ॥**

---

१. 'रम्यैः'. २. 'कुसुमबाणो मन्मथोद्दीपनाय'.

२७ श्लोकस्यान्ते इमे श्लोका दृश्यन्ते—

रुचिरकनककान्तीन्मुञ्चतः पुष्पराशी-
न्मृदुपवनविधूतान्पुष्पितांश्चूतवृक्षान् ।
अभिमुखमभिवीक्ष्य क्षामदेहोऽपि मार्गे
मदनशरनिघातैर्मोहमेति प्रवासी ॥ १ ॥

परभृतकलगीतैर्ह्लादिभिः सद्वचांसि
स्मितदशनमयूखान्कुन्दपुष्पप्रभाभिः ।
करकिसलयकान्तिं पल्लवैर्विद्रुमाभै-
रुपहसति वसन्तः कामिनीनामिदानीम् ॥ २ ॥

कनककमलकान्तैराननैः पाण्डुगण्डै-
रुपरिनिहितहारैश्चन्दनार्द्रैः स्तनान्तैः ।
मदजनितविलासैर्दृष्टिपातैर्मुनीन्द्रा-
न्स्तनभरनतनार्यः कामयन्ति प्रशान्तान् ॥ ३ ॥

मधुसुरभिमुखाब्जं लोचने लोध्रताम्रे
नवकुरुबकपूर्णः केशपाशो मनोज्ञः ।
गुरुतरकुचयुग्मं श्रोणिबिम्बं तथैव
न भवति किमिदानीं योषितां मन्मथाय ॥ ४ ॥

समदेति ॥ रम्यः सुन्दरः कुसुममासो वसन्तसमयः समदा मदसहिता ये मधुकरा भ्रमरास्तेषां कोकिलानां च नादैः । कुसुमिताः संजातकुसुमाः सहकारा आम्रवृक्षास्तैः कर्णिकारैर्द्रुमोत्पलैः । सुतीक्ष्णैरतिनिशितैरिषुभिर्बाणैरिव । मन्मथोद्वेजनायोद्वेजयन्मानिनीनां मानवतीनां मानसं तुदति व्यथयतीत्यर्थः । मालिनीवृत्तमेतत् । लक्षणं तूक्तम् ॥

आम्रीमञ्जुलमञ्जरीवरशरः सत्किंशुकं यद्धनु-
ज्यां यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम् ।
मत्तेभो मलयानिलः परभृतो यद्बन्दिनो लोकजि-
त्सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः २८

---

आकम्पितानि हृदयानि मनस्विनीनां
वातैः प्रफुल्लसहकारकृताधिवासैः ।
संबाधितं परभृतस्य मदाकुलस्य
श्रोत्रप्रियैर्मधुकरस्य च गीतनादैः ॥ ५ ॥
रम्यः प्रदोषसमयः स्फुटचन्द्रभासः
पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः ।
मत्तालियूथविरुतं निशि शीधुपानं
सर्वं रसायनमिदं कुसुमायुधस्य ॥ ६ ॥
छायां जनः समभिवाञ्छति पादपानां
नक्तं तथेच्छति पुनः किरणं सुधांशोः ।
हर्म्यं प्रयाति शयितुं सुखशीतलं च
कान्तां च गाढमुपगूहति शीतलत्वात् ॥ ७ ॥
मलयपवनविद्धः कोकिलेनाभिरम्यः
सुरभिमधुनिषेकाल्लब्धगन्धप्रबन्धः ।
विविधमधुपयूथैर्वेष्ट्यमानः समन्ता-
द्भवतु तव वसन्तः श्रेष्ठकालः सुखाय ॥ ८ ॥

आम्रीति ॥ यस्याम्र्याम्रसंबन्धिनी मञ्जुला सुन्दरा मञ्जरी वरशरा उत्कृष्टा बाणाः सदुत्तमं किंशुकं पलाशकुसुमं धनुः । यस्यालिकुलं भ्रमरसमूहो ज्या गुणः । यस्य कलङ्करहितं सितं श्वेतं छत्रं सितांशुश्चन्द्रः । यस्य मत्तेभो मत्तगजो मलयानिलो मलयसंबन्धी पवनः । यस्य बन्दिनो वैतालिकाः परभृतः कोकिलाः । लोकजिद्वसन्तेनान्वितो युक्तः सोऽयं वितनुरनङ्गो वो युष्मभ्यं भद्रं कल्याणं वितरीतरीतु ददात्वित्यर्थः । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं तु वृत्तरत्नाकरे—'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति ॥

पूजितो न जगदीश्वरो मया
नापि विश्वजननी सुसेविता ।
किंतु यत्प्रलपितं निजेच्छया
तत्र सद्गुरुकृपैव कारणम् ॥

वेदचन्द्रवसुभूमि-( १८१४ )-वत्सरे
माघसूर्यसितपञ्चमीतिथौ ।
व्योमपुष्करनगै-( ७०० )-र्मिता कृतिः
पूरिता हि मणिरामशर्मणा ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये वसन्तवर्णनं नाम षष्ठः सर्गः ।

---

महाकविश्रीकालिदासकृतं

# शृङ्गारतिलकम् ।



बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं
श्रोणीतीर्थशिला च नेत्रशफरी धम्मिल्लशैवालकम् ।
कान्तायाः स्तनचक्रवाकयुगलं कंदर्पबाणानलै-
र्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥

आयाता मधुयामिनी यदि पुनर्नायात एव प्रभुः
प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहं प्रार्थये ।
व्याधः कोकिलबन्धने विधुपरिध्वंसे च राहुग्रहः
कंदर्पे हरनेत्रदीधितिरियं प्राणेश्वरे मन्मथः ॥ २ ॥

इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैः स विधाय वेधाः
कान्ते कथं घटितवानुपलेन चेतः ॥ ३ ॥

एको हि खञ्जनवरो नलिनीदलस्थो
दृष्टः करोति चतुरङ्गबलाधिपत्यम् ।
किं मे करिष्यति भवद्वदनारविन्दे
जानामि नो नयनखञ्जनयुग्ममेतत् ॥ ४ ॥

ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात्क्वचि-
त्ते सर्वे कवयो भवन्ति सुतरां प्रख्यातपृथ्वीभुजः ।

त्वद्वक्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जना-
स्ते ते मन्मथबाणजालविकला मुग्धे किमित्यद्भुतम् ५

झटिति प्रविश गेहे मा बहिस्तिष्ठ कान्ते
ग्रहणसमयवेला वर्तते शीतरश्मेः ।
तव मुखमकलङ्कं वीक्ष्य नूनं स राहु-
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ ६ ॥

कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्तले
नो लुप्तं सखि चन्दनं स्तनतटे धौतं न नेत्राञ्जनम् ।
रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्धितः
किं रुष्टासि गजेन्द्रमत्तगमने किं वा शिशुस्ते पतिः ७

नाहं नो मम वल्लभश्च कुपितः सुप्तो न वा सुन्दरो
वृद्धो नो नच बालकः कृशतनुर्न व्याधितो नो शठः ।
मां दृष्ट्वा नवयौवनां शशिमुखीं कंदर्पबाणाहतो
मुक्तो दैत्यगुरुः प्रियेण पुरतः पश्चाद्गतो विह्वलः ८

समायाते कान्ते कथमपि च कालेन बहुना
कथाभिर्देशानां सखि रजनिरर्धं गतवती ।
ततो यावल्लीलाकलहकुपितासि प्रियतमे
सपत्नीव प्राची दिगियमभवत्तावदरुणा ॥ ९ ॥

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलैः ।
यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुखं
लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते १०

किं किं वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा न ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्वञ्चसे ।
खिन्नाहं तव रात्रिजागरतया तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः
वाणिज्येन गतः स मे गृहपतिर्वार्तापि न श्रूयते
प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता ।
बालाहं नवयौवना निशि कथं स्थातव्यमेकाकिनी
सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥
यामिन्येषा बहलजलदैर्बद्धभीमान्धकारा
निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखैः ।
बाला चाहं खलु खलभयात्प्राप्तगाढप्रकम्पा
ग्रामश्चौरैरयमुपहतः पान्थ निद्रां जहीहि ॥ १३ ॥
क्व भ्रातश्चलितोऽसि वैद्यकगृहे किं तद्रुजां शान्तये
किं ते नास्ति सखे गृहे प्रियतमा सर्वं गदं हन्ति या ।
वातं तत्कुचकुम्भमर्दनवशात्पित्तं तु वक्त्रामृता-
च्छ्लेष्माणं विनिहन्ति हन्त सुरतव्यापारकेलिश्रमात्
यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते १५
चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्यं सूचिकुलायते मलयजालेपः स्फुलिङ्गायते ।
आलोकस्तिमिरायते विधिवशात्प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमयः कल्पान्तकालायते १६

प्राणेश विज्ञप्तिरियं मदीया
तत्रैव नेया दिवसाः कियन्तः ।
संप्रत्ययोग्यस्थितिरेष देशः
करा हिमांशोरपि तापयन्ति ॥ १७ ॥

कल्याणि चन्दनरसैः परिषिच्य गात्रं
द्वित्राण्यहानि कथमप्यतिवाहयेथाः ।
अङ्के निधाय भवतीं परिरभ्य दोर्भ्यां
नेष्यामि सूर्यकिरणानपि शीतलत्वम् ॥ १८ ॥

अन्तर्गता मदनवह्निशिखावली या
सा बाध्यते किमिह चन्दनपङ्कलेपैः ।
यत्कुम्भकारपचनोपरि पङ्कलेप-
स्तापाय केवलमसौ न च तापशान्त्यै ॥ १९ ॥

दृष्ट्वा यासां नयनसुषमामङ्ग वाराङ्गनानां
देशत्यागः परमकृतिभिः कृष्णसारैरकारि ।
तासामेव स्तनयुगजिता हस्तिनः सन्ति मत्ताः
प्रायो मूर्खाः परिभवविधौ नाभिमानं त्यजन्ति २०

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतमभिभ्रान्तभ्रु नृत्यत्करम् ।
चाटुप्रायवचोविचित्रमणितैर्भातं रुतैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम्

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरयुगे रतिखेदखिन्नः ।

वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ २२ ॥

हे रोहिणि त्वमसि रात्रिकरस्य भार्या
एनं निवारय पतिं सखि दुर्विनीतम् ।
जालान्तरेण मम वासगृहं प्रविश्य
श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥ २३ ॥

अविदितसुखदुःखं निर्गुणं वस्तु किंचि-
ज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे ।
मम तु मतमनङ्गस्मेरतारुण्यघूर्ण-
न्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥ २४ ॥

एनं पयोधरयुगं पतितं निरीक्ष्य
खेदं वृथा वहसि किं हरिणायताक्षि ।
स्तब्धो विवेकरहितो जनतापकारी
योऽस्त्युन्नतः प्रपततीति किमत्र चित्रम् ॥ २५ ॥

अयि मन्मथचूतमञ्जरि
श्रवणव्यायतचारुलोचने ।
अपहृत्य मनः क्व यासि त-
त्किमराजन्यकमत्र राजते ॥ २६ ॥

यदि कथमपि दैवाद्दुर्गमार्गे स्खलित्वा
विदलति तनुमध्या दीयतां नौ न दोषः ।
पृथुनिबिडकुचाभ्यां वर्त्म पश्यावरुद्धं
कथयितुमिव नेत्रे कर्णमूले प्रयातः ॥ २७ ॥

कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि
शोचामि यत्तव किमत्र विरोधमन्यत् ।
आश्लेषमर्पय मदर्पितपूर्वमुच्चै-
रुच्चैः समर्पय मदर्पितचुम्बनं च ॥ २८ ॥

मानं मानिनि मुञ्च देवि दयिते मिथ्यावचः श्रूयते
कः कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते ।
दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं
दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु २९

किं मां निरीक्षसि घटेन कटिस्थितेन
वक्रेण चारुपरिमीलितलोचनेन ।
अन्यं निरीक्ष्य पुरुषं तव भाग्ययोग्यं
नाहं घटाङ्कितकटिं प्रमदां भजामि ॥३०॥

सत्यं ब्रवीमि मकरध्वजबाणपीडां
नाहं त्वदर्पितदृशा परिचिन्तयामि ।
दासोऽद्य मे विघटितस्तव तुल्यरूपः
सोऽयं भवेन्नहि भवेदिति मे वितर्कः ॥३१॥

इति श्रीमहाकविकालिदासकृतं शृङ्गारतिलकं समाप्तम् ॥



# निर्णयसागरयन्त्रालये विक्रेयानि संस्कृतपुस्तकानि



| | किं. रु. | आ. | डा. रु. | आ. |
|---|---|---|---|---|
| मेघदूतकाव्य. ... ... ... ... ... | ० | ८ | ० | १ |
| ऋतुसंहार. ... ... ... ... ... | ० | ५ | ० | १ |
| हरिहरसुभाषित. ... ... ... ... | ० | ८ | ० | १ |
| हरविजयमहाकाव्य ... ... ... ... | ५ | ० | ० | ४॥ |
| हरचरितचिंतामणिकाव्य. ... ... ... | १ | १२ | ० | २ |
| स्तुतिकुसुमाञ्जलिकाव्य. ... ... ... | ३ | ० | ० | ३ |
| सेतुबन्धमहाकाव्य. ... ... ... ... | ३ | ४ | ० | ३ |
| सूक्तिसंग्रह. ... ... ... ... ... | ० | १ | ० | ॥ |
| सूर्यशतककाव्य. ... ... ... ... | ० | ६ | ० | १ |
| सहृदयानन्दकाव्य. ... ... ... ... | ० | १० | ० | १ |
| सुरथोत्सव. ... ... ... ... ... | ० | १४ | ० | १। |
| सुभाषितत्रिशती. ... ... ... ... | ० | १२ | ० | १ |
| साम्बपञ्चाशिका. ... ... ... ... | ० | ४ | ० | ॥ |
| समयमातृकाकाव्य. ... ... ... ... | ० | ८ | ० | १ |
| श्रीकण्ठचरितकाव्य. ... ... ... ... | २ | ८ | ० | २॥ |
| शृङ्गारशतक. ... ... ... ... ... | ० | ३॥ | ० | ॥ |
| शृङ्गारतिलक. ... ... ... ... ... | ० | १ | ० | ॥ |
| शिशुपालवधकाव्य. ... ... ... ... | २ | ० | ० | ५ |
| वैराग्यशतक. ... ... ... ... ... | ० | ४॥ | ० | ॥ |
| विदग्धमुखमंडनकाव्य. ... ... ... | ० | ४ | ० | १ |
| विष्णुभक्तिकल्पताकाव्य. ... ... ... | ० | १० | ० | १॥ |
| राक्षसकाव्यसटीक. ... ... ... ... | ० | १ | ० | ॥ |
| रामायणमञ्जरी. ... ... ... ... | ३ | ४ | ० | ४ |
| [illegible]णार्जुनीयकाव्य. ... ... ... ... | १ | ४ | ० | १॥ |